पूर्वादि दिक्षु वज्रं शक्तिं दण्डं खड्गं पाशं अङ्कुशं गदां त्रिशूलं स्थापयेत्

फिरभी पूर्वआदि चारोंदिशाओंसे क्रमसे वज्रआदि अस्त्रोंका स्थापन करे।

पुनः पूर्वादि दिक्षु गजं मेषं महिषं शवं मकरं मृगं नरं वृषभं स्थापयेत् ॥

फिरभी पूर्वआदि दिशाओंमें इसऊपरसे लिखे वाहनोंका स्थापन करे।

पुनः पूर्वादि दिक्षु ऐरावतं पुण्डरीकं वामनं कुमुदं अंजनं पुष्पदन्तं सुप्रतीकंस्थापयेत्॥

फिरभी पूर्वआदि चारो दिशाओं में ऐरावत आदि आठ दिग्गजों का स्थापन करे।

पुनः पूर्वादि चतुर्दिक्षुगणपतिं सप्तमातरः दुर्गां क्षेत्राधिपतिं स्थापयेत् ॥

पुनः पूर्वआदि चारो दिशाओ में गणपति आदि ऊपर में लिखे देवताओं को स्थापना करे।

पुनः पूर्वाद्यष्टदिक्षु कश्यपमत्रिं भरद्वाजं विश्वामित्रं गौतमं जमदग्निं वसिष्ठं अरुन्धतीमावाहयेत् ॥

पुनः पूर्वआदि चारो दिशाओं में और अग्नि आदि कोण में क्रमसे ऊपर में लिखे कश्यप आदि ऋषियों का स्थापन करे।

वाह्य पूर्वादिक्रमेण ऐन्द्रीं कौमारीं ब्राह्मीं वाराहीं चामुण्डां वैष्णवीं माहेश्वरीं वैनायकीमावाहयामि इत्यावाह्य ।

मंडल से बाहर पूर्व आदि चारो दिशाओं के क्रमसे ऐन्द्री आदि ऊपर में लिखे देवताओं का स्थापन करें ।

सर्वतो भद्रमंडल देवताः पाद्यादिभिः षोडशोपचारैः संपूज्य नतिं कुर्यात् ॥

इन ऊपर में लिखे समस्त सर्वतो भद्र मंडल देवताओं की षोडशो पचारसे पूजन और प्रार्थना करे पूजन के मंत्रवही हैं जो पहिले लिखे गये हैं अथवा सर्वतो भद्रमंडल देवेभ्योनमः ॥

अथषोडशमातृकास्थापनंपूजनञ्च ॥

गौरीपद्माशचीमेधा सावित्री विजया जया । देव सेना स्वधास्वाहा मातरो लोकमातरः ॥ हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः । गणेशेना धिका ह्येते वृद्धौ पूज्यास्तु षोडस ॥ इति पाद्यादिभिः संपूज्य नतिं कुर्यात् ॥

इस ऊपर मे लिखे स्थल मातृका ओंके नाम क्रमसे स्थापन आवाहन और पुजनआदि करे ॥

अथ स्थल मातृकाणांस्थापनं पूजनं च ॥

तद्यथा–ब्राह्मी माहेश्वरीचैव कौमारी वेष्णवीतथा । बाराहीच तथेन्द्राणी चामुण्डाः सप्तमातरः ॥

इन ऊपर मे लिखे स्थल मातृकाओंके नामक्रम से स्थापन आवाहन और पूजन प्रणाम करे ॥

अथघृतमातृकापूजनम् ॥

कुड्यलग्न वसोर्धारा पंचधारा घृतेनतु । कारयेत्सप्त धारा वा नातिनीचान चोच्छ्रिताः ॥ कीर्ति र्लक्ष्मी धृतिर्मेधा श्रद्धा प्रज्ञा सरस्वती । मांगल्येषु प्रपुज्याश्च सप्तैता घृत मातरः ॥

इस ऊपर में लिखे घृत मातृकाओंके नामक्रमसे स्थापन करके और दोधारा जलकी और पाँच धाराघी की एक साथ करके सात धारा गिरावे और निम्न लिखित मंत्र को पढे ॥

ॐ व्वसोः पवित्रमसिशतधारंव्वसोः पवित्रमसिसहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः ॥ ॐ भूर्भुवःस्वः घृतमातृभ्यो० आवाहनादि पंचोपचारैः संपुज्यनतिं कुर्यात् ॥

इस ऊपर में लिखे मंत्रसे घृतमातृकाओंका आवाहन और पूजन करे ।

अथ इन्द्र ध्वज पूजनम् ईशान कोणे स्थापनम् ।

इस घृत मातृकाओंके पुजनके बाद इन्द्र ध्वजका पुजन करके ईशान कोण में स्थापन करे ॥

तथा चतुष्षष्ठि देव्यावाहनं स्थापनं पूजनं च ॥

उसी प्रकार चौसठ देवियोंका स्थापनपाद्य अर्घस्नानादि षोडशोपचार से पुजनकरके प्रणामकर और निम्नलिखित मंत्रसेप्रार्थना करे ।

भोदेवताः सायुधाः सपरिवारा सवाहना इहागच्छत० आवाहिताभ्यश्चतुषष्ठि

देवताभ्यः पूजिताभ्योनमः ॥

इसः ऊपर में लिखे मंत्रसे प्रार्थना और साष्टांग प्रणाम करे।

अथतासां नामानि ॥

गजानना १ सिंहमुखा २ गृध्रस्था ३ काकतुंडिका ४ उग्रग्रीवा ५ हयग्रीवा६ वाराही ७ शरभानना ८ उलूकीच ९ शिवाख्याच १० मयूरी ११ विकटानना १२ अष्टवक्रा १३ कोटराक्षी १४ कुब्जा १५ विकटलोचना १६ शुष्कोदरी १७ ललज्जिह्वा १८ श्वदंष्ट्रा १९ वानरानना २० ऋक्षाक्षी २१ केकराक्षीच २२ बृहत्तुंडा२३ सुराप्रिया २४ कपालहस्ता २५ रक्ताक्षी २६ ॥ शुष्की २७ श्येनी २८ कपोतिका२९ पाशहस्ता ३० दंडहस्ता ३१ प्रचंडा ३२ चंडविक्रमा ३३ शिशुघ्नी ३४ पापहंत्री

३५ च काली ३६ रुधिर पापिनी ३७ वसोधारा ३८ गर्भभक्षा ३९ शवहस्ता ४० चित्रमालिनी ४१ स्थूलकेशी ४२ वृहत्कुक्षि ४३ सर्पास्या ४४ प्रेतवाहना ४५ दंदशूककरी ४६ क्रौंची ४७ मृगशीर्षा ४८ वृषानना ४९ व्यत्तास्या ५० धूमनिःश्वासा ५१ व्योमैकचरणा ५२ ध्र्वंदक् ५३ तापिनि ५४ शोषिनी ५५ कोटरी ५६ स्थूलनासिका ५७ विद्युत्प्रभा ५८ वलाकास्या ५९ मार्जारी ६० कटपूतना ६१ अट्टाट्टहासा ६२ कामाक्षी ६३ मृगाक्षीमृगलोचना ६४ नामानिमानि योमर्त्यं चतुषष्ठिः दिनेदिने । जपेत्रिसंध्ये तरयेहं दुष्टबाधा प्रशाम्यति ॥

इस ऊपर में लिखे चतुष्षष्ठि मातृकाओंके नाम को जो कोई मनुष्य चौसठ हिम क्रम से एक एकके नाम को त्रिकाल जप करे तो मनुष्य की दुष्टबाधा नष्टहो जावे और यज्ञ में तो विशेषकर के इनका स्थापन और पूजन करना चाहिये ॥

अथ प्रधानदेवताः आवाहनस्थापन पाद्यादिभिः संपूज्य प्रतिमायां अग्न्यु त्तारणं कृत्वा पंचगव्येन शुद्धिः कार्या । ततः पंचामृतैः स्नापयित्वा आवाहन प्राण प्रतिष्ठे कार्ये । गंधाक्षतपुष्पधूपदीपनैवेद्याचमनीयतांबूलदक्षिणाभिः पूजयेत् ॥

इसके उपरान्त प्रधान देवता का स्थापन आवाहन और पुजनकरके पूर्व में निर्मित प्रतिमाको आगमें किंचित तपाकर पंचगव्य से शुद्धिकरे अनन्तर पंचामृतसे स्नाकराकर आवाहन और प्राण प्रतिष्ठा तथा गंध अक्षत पुष्प धूप दीप नैवद्य आचमनीय तांबूल दक्षिणा आदिकोंसे पूजन करे ।

यद्यदर्पितं तेन कर्मांगदेवताः प्रीयतांनमम् ॥

इस ऊपर में लिखे मंत्रसे पुष्पांजलि समर्पण करके प्रणाम करे ।

अथ कुशकण्डिका करणम् ॥

शुद्धायां भूमौ दर्भैः परिसमूनं हस्तमात्रपरिमितस्त्रां चतुरं भूमिं कुशपरिस

मूह्य तानैशान्यां परित्यज्य गोमयेनोपलिप्य स्रुवमूलेन प्राङ्मुखं प्रादेशमात्रमुत्तरोत्तक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणाऽनामिकांगुष्ठाभ्यामृद्मुद्धृत्य ऐशान्यां दिशि स्थापयेत् । ततःउदकेनाभ्युक्षणम् । एतेपंचभूः संस्कारायत्र यत्राग्निस्थापनं तत्र तत्र क्रियन्ते ॥

हस्तमात्र परिमित चतुष्कोण शुद्ध भूमिपर वेदीबनाकर कुशाओंको क्रमसे बिछावे उन बिछाये गये कुशाओं को ईशान कोणमें फेंक देवे वेदीको गोबरसे लीपे पीछे स्रुवाके मूलसे पूर्वकी तरफ उत्तरोत्तर तीन रेखाकर रेखामें उभड़ी हुई मिट्टीको ईशानकोणमें रखदेवे । इसके बाद जलसे वेदीका मार्जन करे ये पाँचसंस्कार भूमिका जहाँ २ अग्निस्थापन करनाहो वहाँ पहिले करे ।

अथाग्नेः स्थापनम् ॥

वामहस्तानामिकयाभूमिंस्पृशन् ताम्रादिपात्रेणाहृतमग्निमानियात्माभि-

मुखं निदध्यात् ॥ तद्रक्षार्थं किंचिन्नियुज्य आनीताग्निपात्रे अक्षतादिप्रक्षेपः ।

बायें हाथकी अनामिकानामकी अंगुलीसे पृथिवी को स्पर्शकरता हुआ ताम्र अथवा कांस्य आदि पात्रमें अग्निकोमंगाकर अपने सन्मुख रखवावे और आनीत अग्निपात्रपर अक्षत आदि से पुजा करे।

ततोऽग्निं प्रदक्षिणी कृत्य पुष्पचन्दनतांबूलपूंगीफलद्रव्य वस्त्राण्यादायअग्नेर्दक्षिणतो वस्त्रास्तरणं कल्पयित्वा ॥ ब्राह्मणपादप्रक्षालन गंधमाल्यादिभिरभिपूज्य हस्ते वस्त्रादिकं गृहीत्वा—अद्य कर्तव्यामुक हवनकर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिर्द्रव्याक्षतपूंगीफलवासोभिब्रह्मत्वेन त्वामहं वृणे ॥ इति ब्राह्मणं वृणुयात् ॥

अग्निकी प्रदक्षिणा करके अग्निसे दक्षिण ब्रह्माके लिये आसन देवें ब्रह्माकापगधोकर गंध माला आदिसे पुजन करके पुष्प चन्दन तांबूल पूंगीफल द्रव्य वस्त्र आदिको हाथमें लेकर 'ओंअद्य कर्तव्य' यहां से लेकर 'त्वामहं वृणे' यहाँ तक पढकर ब्रह्माका बरण करे ।

ओं वृतोऽस्मि इतिप्रति. वचनम् । ओं व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धा माप्नोति श्रद्धया सत्यमाप्यते ॥

ब्रह्मा "वृतोऽस्मि" ऐसा कहकर "व्रतेन इस मंत्रसे यजमान को मार्जन कर अग्निसे दक्षिण पहिले से रखे गये, आसन पर बैठे ॥

ततः प्रणीता पात्रम् । वारुणकाष्ठमयं द्वादशांगुलोच्चं चतुरंगुलमध्यखातं पद्माकृतिं पुरतोनिधाय जलेनापूर्य्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोकयाग्नेरुत्तरतः कुशोपरि निदध्यात ॥

बारह अंगुल ऊंचा और चार अंगुल गहीरा पद्म के आकार के समानप्रणीता पात्रको अपने संमुख रखकर जलसे भरदेवें कुशासे प्रणोता को ढांकर अपने मुख को देखकर अग्निसे उत्तर तरफ कुशाके ऊपर रखदेवें ।

ततः बर्हिषापरिस्तरणम् ॥ बर्हिर्नाम्नैकाशीति दर्भदलानां चतुर्द्धाभागंकृत्वा यथा एकेन दर्भेण शून्यहस्तोनभवति ? प्रथमभागमादाय आग्नेयादीशानान्तम् । द्वितीयभागमादाय ब्रह्मणोऽग्निपर्यन्तम् । तृतियभाग मादाय नैऋत्याद् वायव्यान्तम् । चतुर्थभाग मादायअग्नितः प्रणीतापर्यन्ते परिस्तरणं कुर्यात् ॥

एककासी ८१ कुशाको लेकर चारभाँग करे परन्तु एक भी भाग हाथसे अतिरिक्त न हो; पूर्वोक्त कुशाके प्रथम भागको लेकर अग्नि कोणसे ईशान कोणतक दुसर भागको लेकर ब्रह्मासेऽग्नि पर्यन्त; तीसरे भागको लेकर नैऋत्य कोणसे वायव्य तक; चौथे भागको लेकर अग्निसे प्रणीतापर्यन्त इसी क्रमसे बिछावे ।

ततोऽग्नेरुत्तरतः पश्चिम दिशिपवित्रच्छेदनार्थंकुशत्रयं पवित्र करणार्थं साग्रमनन्तगर्भं कुशपत्रद्वयं प्रोक्षणीपात्रम, आज्यस्थाली चरुस्थाली संमार्जनकुशः पंच उपयमनकुशाःसप्त सामिधास्तिस्रः स्रुवः आज्यं षटपंचाशदुत्तर शतद्वय

मुष्टयवच्छिन्नं तंडुलपूर्णपात्रं दक्षिणा पवित्रच्छेदन कुशानां पूर्वपूर्वक्रमेणैतान्यासादनीयानि ॥

अग्निसे उत्तर और पश्चिम दिशामें पवित्रछेदन के लिये तीन कुशा और पवित्र दो कुशा तीन समिधा स्रुवा घी ब्रह्मा के दक्षिणा के लिये पूर्णपात्र अथवा कुछ फल आदिको सामग्रियों को पूर्व पूर्व के क्रमसे रखे ।

अथत्रिभिः पवित्रे छित्वासपवित्रकरेण प्रणीतोदकंत्रिः प्रोक्षणी पात्रे निधाय प्रोक्षणीपात्र वामहस्ते धृत्वा दक्षिणहस्तानामिकाङ्गुष्ठाभ्यांपवित्रं गृहीत्वात्रिरुत्पवनम् ॥ ततः प्रोक्षणीपात्रम् । आकाशस्थप्रणीतोदकेनापूरयेत् । भूमौ पतति चेत्तदा प्रायश्चित्त गोदानम । ततः प्रोक्षणी जलेन यथासादित वस्त्वनुरूपं सेचनम् । ततोऽग्नि प्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् । आज्यस्थाल्यामाज्यनिर्वापः

चरुपात्रे चरुप्रक्षेपः । आज्याधिश्रयणम् । ततोज्वलत्तृणमवदाय आज्यस्योपरि प्रदक्षिणं भ्रामयित्वा वन्हौ तत्प्रक्षेपः । ततः स्रुवप्रतपनं कृत्वा संमार्जनकुशैः स्रुवसंमार्जनं मूलेन मूलं मध्येन मध्यम् अग्रेणाग्रम् पुनः प्रतिताप्य दक्षिणतो निदध्यात् । ततः आज्योत्तारणम् अवेक्षणम् अपद्रव्यनिरसनं च । ततः उपयमनकुशानादाय वामहस्ते धृत्वा अग्निपर्युक्षणं कृत्वा उत्तिष्ठन् मनसा प्रजापतिं ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् । उपविश्य सपवित्रप्रोक्षण्युदकेनाग्निं पर्युक्ष्य पवित्रे प्रणीतापात्रे निधाय पातितदक्षिणजानुः कुशेन ब्राह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् । तत्राघारादारभ्य द्वादशाहुतिषु प्रत्याहुत्यनन्तरंस्रुवस्थितशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ इति कुशकण्डिकाविधिः ॥

## अथसमिद्विधिः ॥

समिदर्कमयी भानोः पालाशी शशिनस्तथा। खादिरी भूमिपुत्रस्य त्वापामार्गी बुधस्य च ॥ गुरोरश्वत्थजा प्रोक्ता शुक्रस्यौदुम्बरी मता॥ शमीनां तु शनेः प्रोक्ता राहो दूर्वामयी तथा ॥ केतोर्दर्भमयी प्रोक्ताऽन्येषां पालाशवृक्षजा ॥१॥

सूर्यको मन्दार, चन्द्रमाको पालाश, मंगलको खैर, बुधको चिचिड़ी, बृहस्पतिको पिप्पल, शुक्रको गूलर, शनैश्चरको शमी, राहुको दूर्वा, केतुको कुशा, ये काष्ठ नवग्रहोंके हवन में विहित हैं इनसे अतिरिक्त देवताओंके हवनमें पालाश अथवा आम्र वा देशभेदसे जो काष्ठ विहित हो उसीकी समिधा होनी चाहिये।

आर्किर्नाशयते व्याधिं पालाशी सर्वकामदा। खादिरी त्वर्थलाभाय चापामार्गीष्ट दर्शिनी ॥ प्रजालाभाय वाश्वत्थी स्वर्गायौदुम्बरा भवेत्। शमीशमयते पापं दूर्वादीर्घा

युगेव च ॥ कुशा. सर्वार्थकामानां परमं रक्षणं विदुः ॥

मन्दार रोगको नाश करता है, पालाश सिद्धिदायक है. खैरसे धनलाभ, चिचिडीसे इष्टलाभ, पीपलसे प्रजालाभ, गूलरसे स्वर्गलाभ, शमीसे पापनाश, दूर्वासे दीर्घायु, कुशासे समस्त अभिलाषा की सिद्धि ये हवन काष्ठके फल हैं और ग्रहोंकी अरिष्टतामें इन काष्ठोंसे हवनका विशेष गुण होता है॥

यथा बाणप्रहाराणां कवचं वारकं भवेत्। तद्वद्दैवोपघातानां शान्तिर्भवति वारिका ॥ यथासमुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते । तथा समुत्थितं घोरं शीघ्रं शान्त्या प्रशाम्यति ।

इन ऊपरमें लिखे मंत्रसे कुशासे जल लेकर यजमानको मार्जन करे।

अथाग्न्यावाहनम्—ततः कुण्डमध्ये ॐ रं इति वन्हिबीजं लिखेत्। उत्पत्तिमुद्रां कृत्वा वाहयेदग्निपूरुषम्–रुद्रतेजस्समुद्भूतं द्विमूर्धानं द्विनासिकम् ॥ स्रुचं स्रुवं च शक्तिं चाप्यक्षमालां च दक्षिणैः । तोमरं व्यजनं चैव घृतपात्रं तु वामकैः ॥ विभूतं

सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् । दक्षिणे च चतुर्जिह्वं त्रिजिह्वं चोत्तरं मुखम् ॥
कोटिद्वादशमूर्त्याख्यं द्विपञ्चाशत्कलायुतम् । स्वाहास्वधावषट्काररंकितं मेषवाहनम् ॥
रक्तमाल्याम्बरं रक्तं रक्तपद्मासनस्थितम् । रौद्रं वागीश्वरीरूपं वन्हिमावाहयाम्यहम् ॥
त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते । आगच्छ भगवन्नग्ने यज्ञस्मिन् सन्निधौ भव ॥
अग्ने वैश्वानर इहागच्छ इह तिष्ठ इत्यावाह्य पंचोपचारैः पूजयेत् ॥

अग्निकुंडके मध्यमें 'ओं रं' यह वन्हिबीजको लिखे बाद अक्षत पुष्प हाथमें लेकर 'रुद्रतेज' यहाँसे 'रक्तपद्मासनस्थितम्' यहाँ तक पढ़कर अग्नि पुरुषका ध्यान करे 'आगच्छ' इसको पढ़कर वन्हिका आवाहन और पूजन करे ।

ततः अग्नेः सप्तजिह्वानां पूजा । कनकायैनमः रक्तायैनमः कृष्णायैनमः उद्गारिण्यैनमः उत्तरमुखे सुप्रभायैनमः वहुरूपायैनमः अतिरिक्तायैनमः ॥

इन ऊपरमें लिखे जो सात नाम हैं उनको सप्तजिह्वा कहते हैं इन्हीं नामोंसे इनका आवाहन करे ॥

तदनन्तरं सर्व समिद् वनस्पतीनां पूजनम् ॥

इसके बाद समस्त काष्ठोंका और वनस्पतियों का पूजन करे ।

ॐ अद्येत्यादि अमुकगोत्रोऽमुकनामाहं सकुटुम्बस्य सपरिवारस्यात्मनः सर्वाभीष्टफलप्राप्त्यर्थममुकयज्ञकर्मणा श्रीसूर्यादिनवग्रहादीनां साधिदेवताप्रत्यधिदेवतानां दश दिक्पालानाममुकप्रधानदेवतासहितानां च प्रीतये ब्राह्मणद्वारा यवतिलधान्याज्यशर्करादिद्रव्यैस्तत्तद्देवतामन्त्रैर्यक्ष्ये ।

यजमान हाथमें जल अक्षत पुष्प दक्षिणा लेकर ओं अद्य यहांसे लेकर यक्ष्ये यहांतक पढ़कर ऊपरमें लिखे अनुसार संकल्प करे ।

ततो मनसा व्याहृतिभिराहुतिर्दद्यात् ॥

इसके उपरान्त व्याहृतियों से आहुति देवे ।

## अथ होमः ॥

अब होमका विधान लिखते हैं ॥

ॐ प्रजापतयेस्वाहा । इदंप्रजापतयेनमम । ॐ इन्द्रायस्वाहा । इदमिन्द्राय० ॐ अग्नयेस्वाहा । इदमग्नयेनमम । ॐ सोमायस्वाहा । इदंसोमाय० । ॐ भूःस्वाहा । इदमग्नये० । ॐ भुवः स्वाहा । इदंवायवे० । ॐ स्वः स्वा० । इदंसूर्याय० । एता महाव्याहृतयः ॥

ये ऊपरमें लिखे व्याहृतियोंके नाम हैं मंत्र से पहिले हवन करे ।

यथाबाणप्रहाराणां कवचं वारकमवेत् । तद्वद्दैवोपघातानां शान्तिर्भवति वारिका ॥ ॐ शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु यत्पापं तत्प्रतिहतमस्तु । द्विपदे चतुष्पदे सुशान्तिर्भवतु ॥ इतिप्रायश्चित्तहोमः ॥

जैसे बाणप्रहार का वारक कवच होता है वैसे ही दैवोपघातकी वारिका शान्ति होवे ऐसा

कहकर ऊपर में लिखे 'सुशान्ति' यहाँ से लेकर 'शान्तिर्भवतु' यहाँ तक पढ़कर यजमान के ऊपर मार्जन करे ॥

## अथपंचवारुणीहोमः ॥

ॐ त्वन्नोऽ अग्नेव्वरुणस्यविद्वान् देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वन्हितमः शोशुचानो विश्वाद्वेषा ५ सिप्रमुमुग्ध्यस्मत् स्वाहा ॥ इदमग्नीव्वरुणाभ्यांनमम ॥ १ ॥

ॐ सत्वन्नोऽअग्नेवमोभवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्वनो व्वरुण ५ रराणो व्वीहिमृडीकँ सुहवो न एधिस्वाहा ॥ इदमग्निवरुणाभ्यां नमम ॥ २ ॥

ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वामित्व मयाऽसि । अयानो यज्ञं वहास्ययानो भेषज ँ स्वाहा ॥ इदमग्नयेन्नमम ॥ ३ ॥

ॐ येतेशतंव्वरुणाये सहस्रयज्ञियाः पाशा व्वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत व्विष्णु व्विश्वेमुञ्चन्तुमरुतः स्वर्काः स्वाहा ॥ इदं व्वरुणाय सवित्रे विष्णवे व्विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥ ४ ॥

ॐ उदुत्तमं व्वरुणपाशमस्मदवाधमं विमध्यमं श्रथाय । अथाव्वयमादित्य-व्रतेतवानागसोऽअदितयेस्यामस्वाहा॥इदंवरुणायादित्यायादितये०॥इतिपंचवारुणीहोमः

इन ऊपरमें लिखे पांच मंत्रों को पढ़कर पंचवारुणी होम करे । इसके बाद जल मार्जन करे ।

अथनवग्रहाणां होमः ॥

पूर्वमें लिखे समिद् विधान में लिखे नवग्रह के काष्ठों को निम्न लिखित मंत्र से काष्ठ को घी में डुबोकर हवनकरे ॥

ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतंमर्त्यञ्च । हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् । तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ इदंसूर्याय० ॥

इस ऊपर में लिखे मंत्र से मन्दार काष्ठको घीमें डुबोकर सूर्यके लिये हवन करे ॥

ॐ इमं देवाऽअसपत्नꣳ सुवध्वमहते क्षत्राय महते जेष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय इमममुष्यपुत्रममुष्य पुत्रमस्यै विशएषवोऽमीराजासोमोस्माकं ब्राणानाꣳ राजास्वाहा ॥

दधिशंखतुषाराभं क्षीरार्णवसमुद्भवम् । नमामि शशिनंसोमं शंभोर्मुकुटभूषणम् ॥ इदंचन्द्राय०

ऊपर में लिखे 'इमे देवा' इस मंत्र से अथवा 'दधिशंख' इस मंत्रसे चन्द्रमाको हवन करे ॥

ॐ अग्निमूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् । अपारेता ठं॰ सिजिन्वति ॥ धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम् । कुमारशक्तिहस्तं तं मंङ्गलं प्रणमाम्यहम् ॥ इदमंगलाय॰

इस मंत्र से मंगल को हवि देवे ॥

ॐउद्बुध्यस्वाग्ने प्रतिजागृहित्वमिष्टापूर्तेसर्वं सजेथामयंच । अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् विश्वेदेवा यजमानश्चसीदत ॥ गदावरदहस्तश्चसुवर्णाभः समाविश। बुधं बुद्धिप्रदातारं सूर्यरश्मिसमन्वितम् ॥ इदं बुधाय–

इस ऊपर में लिखे मंत्र से बुधको हवन करे ॥



ॐ वृहस्पतेऽअति अदर्य्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु । यदीदयच्छवसऽ

ऋत्तप्रजाततदस्मासु द्रविणं धेहि चित्रँ स्वाहा ॥ इदं बृहस्पतये० ॥

ऋत्तप्रजाततदस्मासु द्रविणं धेहि चित्रँ स्वाहा ॥ इदं बृहस्पतये० ॥ पुरोहित ॥

दण्डाक्षसूत्रवरद कमंडलुधरप्रभो । मेरुमूर्द्धागतादिव्यदेवतानां

इस ऊपर में लिखे मंत्र से बृहस्पति को हवन करे ॥

ॐ अन्नात् परिस्रुतो रसम्ब्रह्मणा व्यपिवत्क्षत्रंपय÷सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृत्तम्मधुस्वाहा ॥ इदंशुक्राय०

इस ऊपर में लिखे मंत्रसे अथवा शुक्रायनमः इस मंत्र से शुक्र को हवन करे ॥

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये । शंय्योरभिस्रवन्तुनः ॥

इस ऊपर में लिखे मंत्र से अथवा शनैश्चरायनमः इस मंत्रसे शनि को हवन करे ॥

ॐ कयानश्चित्रऽआभुव दूतीसदावृध÷सखा । कयाशचिष्ठयावृतास्वाहा ।

इदं राहवे०

इस ऊपर में लिखे मंत्र से अथवा राहवेनमः इस मंत्र से राहु को हवन करे।

ॐ केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे । समुषद्भिरजायथा स्वाहा ।
इदं केतवे०

इस ऊपर में लिखे मंत्र से अथवा केतवेनमः इस मंत्र से केतुको हवन करे ॥

अथनवग्रहाधिदेवतानां होमः ॥

ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ इदं त्र्यम्बकाय०

इस ऊपर में लिखे मंत्र से त्र्यम्बक के लिये हवन देवे ॥

ॐ श्रीश्चते लक्ष्मीश्च पत्न्या वहे रात्रे पार्श्वे नक्षत्राणिरूपमश्विनौ व्यात्तम्॥ इष्णन्निषाण मुम्मइषाण सर्व लोकम्मऽइषाण स्वाहा ॥ इदमुमायै०

इस ऊपरमें लिखे मंत्रसे उमा देवीको हवन देवे ॥

ॐ यदक्रन्दः प्रथमञ्जायमान÷उद्यन्त्समुद्रा दुतवा पुरीषात् ॥ श्येनस्य पक्षा

हरिणस्यबाहूऽउपस्तुत्यम्महिजातन्ते अर्वन् ॥ इदंस्कन्दाय०

इस मंत्रसे स्कन्द देवता के लिये हवन देवे ।

ॐ विष्णोरराटमसि विष्णोः स्नप्त्रेस्थो विष्णोः स्यूरसिविष्णोर्ध्रुवोऽसि ॥

वैष्णवमसि विष्णवे त्वा स्वाहा ॥ इदं विष्णवे० ॥

इस ऊपरमें लिख मंत्रसे विष्णुके लिये आहुति देवे ।

ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेन आवः । सबुध्न्याऽउपमा

ऽअस्य व्विष्ठा÷ सतश्चयोनिमसतश्चव्विवः स्वाहा ॥ इदम्ब्रह्मणे० ॥

इस ऊपरमें लिखे मंत्रसे ब्रह्माके लिये आहुति देवे ।

ॐ त्रातारमिन्द्रमवितारमिन्द्रँ हवेहवे सुहवँ शूरमिन्द्रम्॥ हवयामिशक्र-

पुरुहूतमिन्द्र ँ स्वस्तिनोमघवाभ्विन्द्रः स्वाहा ॥ इदमिन्द्राय० ॥

इस ऊपरमें लिखे मंत्रसे भगवान इन्द्रके लिये हवन देवे ॥

ॐ असियमोऽअस्य दित्योऽअर्व्वन्नसित्रितो गुह्येन व्रतेनऽअसिसोमेन समया विपृक्तऽआहुस्ते त्रीणि दिविबन्धनानि स्वाहा ॥ इदंयमा० ॥

इस ऊपरमें लिखे मंत्रसे यमके लिये आहुति देवे और जलसे मार्जन करे ।

ॐ कार्षीसि समुद्रस्यत्वाक्षित्याऽउन्नयामि । समापो अद्भिरग्मतसमोषधीभिरोषधीः स्वाहा ॥ इदंकालाय० ॥ अत्राप्युदकस्पर्शः ।

इस ऊपरमें लिखे मंत्रसे कालके लिये आहुति देवे और यहां भी जलसे स्पर्श करे ।

ॐ इन्धानास्त्वा शत ँ हिमाद्युमन्त ँ समिधीमहि । व्वयस्वन्तो व्वयस्कृतं

सहस्वन्त ं सहस्कृतम् ॥ अग्नेसपत्नदम्भनमदब्धासोऽअदाभ्यं चित्राव्वसो स्वस्तिते पारमशीय स्वाहा ॥ इदं चित्रगुप्ताय० ॥

इस ऊपरमे लिखे मंत्रसे चित्रगुप्तके लिये आहुति देवे। अब नवग्रहोंके अधिदेवताओं का हवन समाप्त।

अथ नवग्रहप्रत्यधिदेवतानां होमः ॥

ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे। देवाँ आसादयादिहस्वाहा। इदमग्नये०

इस ऊपर लिखे मंत्रसे नवग्रहोंके प्रत्यधिदेवताओ में अग्निके लिये हवन देवे।

ॐ अप्स्वन्तरमृतमप्सुभेषजमपामुत प्रशस्तिष्वश्वा भवतव्वाजिनः। देवीरापो योव ऊर्म्मिः प्रतूर्ति ं ककुद्मान् व्वाजसा स्तेनायंव्वाय ँ सेत् स्वाहा ॥ इदमद्भ्यः॥

इस ऊपरमें लिखे मंत्रसे जल देवताके लिये हवन देवे।

ॐ स्योनापृथिवी नोभवानृक्षरानिवेशनी। यच्छान÷शर्म्मसप्प्रथा÷स्वाहा ॥ इदंपृथि० ॥

इस ऊपरमें लिखे मंत्रसे पृथिवी देवीको आहुति देवे।

ॐ इदंव्विष्णुर्विचक्रमेत्रेधानिदधेपदम्। समूढमस्यपाँ सुरे स्वाहा. इदंविष्णवे०॥

इस ऊपरमें लिखे मंत्रसे विष्णु देवताको आहुति देवे।

ॐ सजोषाऽइन्द्रसगणो मरुद्भिः सोमम्पिब वृत्राशूरव्विद्वान्। जहिशत्रूँ रपमृधोनुदस्वाथा भयं कृणुहि व्विश्वतोन÷स्वाहा। इदमिन्द्राय० ॥

इस ऊपरमें लिखे मंत्रसे इन्द्र देवताके लिये आहुति देवे।

ॐअदित्यैरास्नासीन्द्राण्याउष्णीव÷पूषासि घर्मायदीष्वस्वाहा॥इदमिन्द्राण्य०॥

इस ऊपरमें लिखे मंत्रसे इन्द्राणीको आहुति देवे।

ॐ प्रजापतेन त्वदेतान्यन्यो व्विश्वारूपाणि परिताबभूव। यत्कामास्ते जुहुम.

स्तन्नोऽअस्तुव्वयँ स्यामपतयोरयीणाँ स्वाहा ॥ इदंप्रजापतयेनमम ॥

इस मंत्रसें प्रजापतिके लिये आहुति दान करे ॥

ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनआव ÷ । सुबुध्न्याऽउपमा अस्यव्विष्ठाः सतश्चयोनिमसतश्च व्विव÷स्वाहा । इदं ब्रह्मणे० ।

इस ऊपर लिखे मंत्रसे ब्रह्माके लिये आहुति प्रदान करे ।

अथ पञ्चलोकपालानां होमः ॥

ॐ गणानांत्वा गणपतिर्ठ०हवामहे प्रियाणान्त्वा प्रियपतिर्ठ० हवामहे निधिनां न्त्वा निधिपतिर्ठ० हवामहे व्वसोमम । आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् स्वाहा । इदंगणपतये० ।

इस ऊपर में लिखे मंत्रसे गणपतिके लिये आहुति प्रदान करे ।

ॐ अम्बे अम्बिकेऽऽ म्बालिके नमानयतिकश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा । इदंदुर्गायै० ॥

इस ऊपरमें लिखे मंत्रसे दुर्गा देवीके लिये आहुति प्रदान करे।

ॐ वातोघामनो गन्धर्वाः सप्तविंशतिं तेऽअग्रस्वमयुञ्जस्तेऽअस्मिञ्जवमादधुः स्वाहा । इदंवायवे० ।

इस ऊपरमें लिखे मंत्रसे वायुदेवताके लिये आहुति प्रदान करे।

ॐउर्ध्वास्य समिधोभवन्त्यूर्ध्वा शुक्राशोची ँ ष्यग्नेः द्युत्तमा सुप्रतीकस्यसूनोः स्वाहा । इदमाकाशाय ॥

इस ऊपरमें लिखे मंत्रसे आकाशतत्व के लिये आहुति प्रदान करे।

ॐ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येन वीर्या-

यान्नाद्यायाभिषिञ्चामि स्वाहा ॥ इदमश्विभ्याम् ॥

इस ऊपरमें लिखे मंत्रसे अश्विनीकुमारों के लिये आहुति प्रदान करे।

## अथ दशदिक्पालानां होमः ॥

ॐ त्रातारमिन्द्रमवितारमिन्द्र ँ हवे हवे सुहवशूरमिन्द्रियम् । हवयामिशक्रम्पुरुहूतमिन्द्र ँ स्वस्तिना मेघवाधा त्विन्द्रः स्वाहा ॥ इदमिन्द्रायेन० ॥

इस ऊपरमें लिखे मंत्रसे इन्द्र देवताके लिये आहुति प्रदान करे।

ॐ अग्निदूतम्पुरोदधेहव्यवाहमुपब्रुवे । देवा ँ आसादयादिह स्वाहा । इदमग्नये ० ।

इस ऊपरमें लिखे मंत्रसे अग्नि देवताके लिये आहुति प्रदान करे।

ॐ असियमोऽअस्यादित्योऽअर्व्वन्नसित्रितो गुह्येन व्रतेन । असिसोमेन

समया विपृक्तऽआहुस्तेत्रीणि दिविबन्धनानि । स्वाहा० इदंयमाय०

'ओं अश्वियमो' इस मंत्रको पढ़कर यमके लिये आहुति प्रदान करे।

ॐ एषतेनिर्ऋतेभागस्तं जुषस्वस्वाहाग्नी नेत्रेभ्योदेवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो वामरुन्नेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वेदेवनेत्रेभ्यो देवेभ्यः पश्चात् सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वामरुन्नेत्रेभ्यो वा देवेभ्यउत्तरा सद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यउपरिसद्भ्यो दुवस्वन्तस्तेभ्यः स्वाहा । इदन्निर्ऋतये० ।

इस ऊपरमें लिखे एषते इस मंत्र से निर्ऋति देवता के लिये आहुति प्रदान करे ।

ॐ इमम्मे व्वरुणश्रुधीहवमद्या चमृडयत्वा मवस्युराचके स्वाहा । इदंवरुणाय०

इस मंत्र से वरुण देवता के लिये आहुति प्रदान करे ।

ॐ वायुरग्रेगायज्ञप्रीः साकं गन्मनसा यज्ञं शिवो नियुद्भिः शिवाभिः स्वाहा इदंवायवे० ।

इस ऊपर में लिखे मंत्र से वायु देवताके लिये आहुति प्रदान करे ।

ॐ कुविदङ्गैवयमन्तो यवं चिद्यथानुपूर्वं वियूय इहेहैषां कृणुहि भोजनानिये बर्हिषोनमऽउक्तिं यजन्ति स्वाहा । इदंकुवेराय० ।

इस ऊपर में लिखे मंत्र से कुबेर देवताके लिये आहुति प्रदान करे ।

ॐ ईशावास्य मिदंसर्व ँ यत्किञ्च जगत्यां जगत् । तेनत्यक्तेनभुञ्जीथा-सागृधः कस्य स्विद्धनम् स्वाहा । इदमीशानाय० । अत्रोदकस्पर्शः ॥

इस ऊपर में लिखे मंत्र को पढ़कर ईशान देवताके लिये आहुति प्रदान करे और जल छिड़के ।

ॐ नमोऽस्तुसर्पेभ्यो ये केच पृथिवीमनु । ये अन्तरिक्षे येदिवि तेभ्यः सर्पेभ्यो नमः स्वाहा । इदमनन्ताय० ।

इस ऊपर में लिखे नमोऽस्तुसर्पेभ्यो इस मंत्र से अनन्त के लिये आहुति प्रदान करे ।

ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽ आवः । सबुध्न्याऽउपमा अस्यविष्ठा शतश्च योनिमसतश्चविव्वः स्वाहा इदंब्रह्मणे० ॥

इस ऊपर में लिखे मंत्र से ब्रह्मा के लिये आहुति प्रदान करे ।

अथ प्रधानदेवस्य होमः ।

ॐ नमोभगवते वासुदेवाय ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णु भवभयहरं सर्वलोकैकनाथम् ॥

इ । ऊपरमें लिखे मंत्रसे अथवा बारह अक्षरके मंत्रसे भगवान वासुदेवको आहुति देवे ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मासीनं समन्तात् स्तुत मरगणैः व्याघ्रकृत्तिं वसानम् विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ ॐ नमः शिवाय ॥

इस ऊपरमें लिखे मन्त्रसे अथवा पंचाक्षर मंत्रसे शिव भगवान्के लिये आहुति देवे।

ॐ जयन्ती मंगलाकाली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तुते ॥

इस ऊपरमें लिखे मंत्रसे दुर्गा देवीको आहुति प्रदान करे।

अमुक प्रधानदेवतायै स्वाहा।

अथवा अमुक प्रधान देवतायै अर्थात् जो प्रधान देवता हों उनके नामसे अथवा मंत्रसे आहुति को देवे।

## अथानन्तरं व्याहृतिहोमः ।

इसके उपरान्त निम्नलिखित व्याहृतिहवन करके मंडलस्थ देवताओंको आहुति देवें ।

ॐ भूः स्वाहा इदमग्नये । ॐ भुवः स्वाहा इदंवायवे० । ॐ स्वः स्वाहा इदंसूर्याय० । इति व्याहृतिहोमः ।

## अथ सर्वतोभद्रमंडलदेवानां होमः ।

गणपतयेस्वाहा० दुर्गायैस्वा० ब्रह्मणेस्वा० सोमायस्वा० ईशानायस्वा० इन्द्रायस्वा० अग्नयेस्वा० यमायस्वा० निर्ऋतयेस्वा० वरुणायस्वा० वायवेस्वा० अध्वरायस्वा० सोमायस्वा० ईशानायस्वा० अद्भ्योस्वा० अनलायस्वा० नलायस्वा० प्रत्यूषायस्वा० प्रभासायस्वा० अजायस्वा० एकपदेस्वा० अहिर्बुध्न्यायस्वा० विरूपाक्षायेस्वा० रैवतायस्वा० रहाय० बहुरूपायस्वा० त्र्यम्बकायस्वा० सुरेश्वराय०

सवित्रेस्वा० जयन्तायस्वा० पिनाकिनेस्वा० रुद्रायस्वा० धात्रेस्वा० मित्रायस्वा०
यमायस्वा० रुद्रायस्वा० वरुणायस्वा० सूर्यायस्वा० भगायस्वा० विवस्वतेस्वा०
पूष्णेस्वा० सवित्रेस्वा० त्वष्ट्रेस्वा० विष्णवेस्वा० अश्विभ्यांस्वा० क्रतवेस्वा०
दक्षायस्वा० वसवेस्वा० सत्यायस्वा० कालायस्वा० कामायस्वा० अध्वरायस्वा०
रोचनायस्वा० पुरूरवसेस्वा० आर्द्रवायस्वा० सोमपायस्वा० अग्निष्वात्तायस्वा०
वर्हिषदेस्वा० सुकालायस्वा० एकशृङ्गायस्वा० शूद्रायस्वा० सोमायस्वा० कश्यपायस्वा०
अत्रयेस्वा० भरद्वाजायस्वा० विश्वामित्रायस्वा० गौतमायस्वा० जमदग्नयेस्वा०
वशिष्ठाय० अनन्तायस्वा० वासुकयेस्वा० शेषायस्वा० तक्षकायस्वा० पद्मायस्वा०
महापद्मायस्वा० शंखपालायस्वा० कंबलायस्वा० पिशाचेभ्यःस्वा० गुह्यकेभ्यःस्वा०
सिद्धेभ्यःस्वा० भूतेभ्यःस्वा० सर्पेभ्यःस्वा० विश्वावसवेस्वा० गन्धर्वायस्वा० हाये

स्वा० हहैस्वा० घृताच्यैस्वा० मेनकायैस्वा० उर्वश्यैस्वा० सुकेश्यैस्वा० मंजुघोषायै
स्वा० रुद्रेभ्यःस्वा० स्कन्दायस्वा० नन्दीश्वरायस्वा० शूलायस्वा० महादेवायस्वा०
रुद्रायस्वा० श्रियैस्वा० मरुद्गणायस्वा० पितृभ्यःस्वा० रोगायस्वा० मृत्यवेस्वा०
जगत्प्राणायस्वा० समीरणायस्वा० मातरिश्वनेस्वा० गोदायैस्वा० ताप्यैस्वा०
मेदिन्यैस्वा० गंगायैस्वा० सरस्वत्यैस्वा० कौशिक्यैस्वा० वेत्रवत्यैस्वा०गोदायैस्वा०
रेवायैस्वा० पयोदायैस्वा० कृष्णायैस्वा० भीमरथ्यैस्वा० तुंगभद्रायैस्वा० क्षुद्रनदी
भ्यःस्वा० लवणसमुद्रायस्वा० इक्षुसमुद्रयस्वा० सुरासमुद्रायस्वा०सर्पिःसमुद्रायस्वा०
दधिसमुद्रायस्वा० क्षीरसमुद्रायस्वा० जीवनसमुद्रायस्वा० आदित्योयस्वा० सोमाय-
स्वा० भौमायस्वा० बुधायस्वा० बृहस्पतयेस्वा० शुक्रायस्वा० शनैश्चरायस्वा०
राहवेस्वा० केतवेस्वा० ब्राह्मयैस्वा० माहेश्वर्य्यैस्वा० कौमार्य्यैस्वा० वैष्णव्यैस्वा०

वाराह्यैस्वा० इन्द्राण्यैस्वा० चामुण्डायैस्वा० वज्रायैस्वा० शक्तयेस्वा० दण्डायस्वा० खड्गायस्वा० पाशायस्वा० अंकुशायैस्वा० गदायैस्वा० त्रिशूलायस्वा० पद्मायस्वा० चक्रायस्वा० महाविष्णवेस्वाहा ॥

अथदशदिक्पालानांबलिदानम् ।

पूर्वे इन्द्रायसांगाय सपरिवाराय सायुधाय सशक्तिकाय एतंसदीपंदधिमाभक्तबलिंसमर्पयामि ॥ भोइन्द्रदिशंरक्ष बलिंभक्ष अस्यसकुटुम्बस्य यजमानस्य आयुर्कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदोभव ॥ १ ॥

ऊपरमें लिखे दिशाओं के क्रमसे दीपके सहित दहिऔर उर्दसे अथवा भातकी बलिइन्द्रके लियेदेवे ।

अग्नेय्याम् ॥ भोअग्ने दिशंरक्ष अस्य बलिंभक्ष यजमानस्य सकुटुम्बस्य आयुः

कर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदोभव ॥ २ ॥

इसऊपरमें लिखे मंत्रसे अग्निदेवता के लिये बलिदेवे।

नैऋत्याम् ॥ नैऋतये सांगाय सपरिवाराय सशक्तिकाय एतं सदीपं दधिमाषमक्त बलिंसमर्पयामि ॥ भोनैऋतेदिशंरक्ष बलिभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुः कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ॥ ४ ॥

इसऊपरमें लिखे मंत्रसे निऋतिदेवता लिये बलिदेवे।

पश्चिमे ॥ वरुणाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषमक्त बलिं समर्पयामि। भोवरुणदिशं रक्षबलिभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ॥ ५ ॥

इसऊपरमें लिखे मंत्रसे पश्चिमदिशामें वरुण के लिये बलिदेवे।

वायव्याम् । वायवे सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भोवायो दिशंरक्ष बलिंभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ॥

इस ऊपरमें लिखे मंत्रसे दिपसहित वायुदेवताके लिये बलिदेवे ।

उत्तरस्याम् ॥ कुबेराय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भोकुबेरदिशं रक्ष बलिंभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शन्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ।

इसऊपरमें लिखे मंत्रसे उत्तारदिशामें कुबेर के लिये बलि देवे और मार्थना करे ।

ऐशान्याम् ॥ ईशानाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भोईशान दिशं रक्ष बलिंभक्ष अस्य यजमानस्य

सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ॥

इसऊपरमें लिखे मंत्रसे ईशान देवताके लिये बलिदेवे और प्रार्थना करे ।

ईशानपूर्वयोर्मध्ये ॥ ब्रह्मणेसांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भोब्रह्मन् दिशंरक्ष बलिंभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ।

ईशान और पूर्व के मध्यमें ऊपर लिखे मंत्रसे ब्रह्मा के लिये बलि देवे और प्रार्थना करे ।

निऋतिपश्चिमयोर्मध्ये--अनन्ताय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि ॥ भो अनन्त दिशंरक्ष बलिंभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ॥ १० ॥

निऋतिपश्चिम के बीच में ऊपर लिखे मंत्र से अमन्त दीपके सहित अनन्तके लिये बलि देवे

और भी अनन्त यहाँ से लेकर वरदोभव यहाँ तक पढ़कर प्रार्थना सब जगह करे ॥

अथ नवग्रहबलिः ।

ग्रहेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशाक्तिकेभ्यः एतेभ्यः सदीपं दधिमाषभक्तबलिभ्यः समर्पयामि । भोग्रहाः दिशोरक्षध्वम् बलिभक्षध्वम् अस्य यजमानस्य सकुटुम्बस्यः आयुकर्तारः क्षेमकर्तारः शान्तिकर्तारः तुष्टिकर्तारः पुष्टिकर्तारो वरदोभवत ॥ इतिग्रहादिबलिः ॥

इस ऊपरमें लिखे मंत्रों से दीप सहित नवग्रहों के लिये बलि देवे ।

दुर्गायै सांगायै सपरिवारायै सायुधायै सशक्तिकायै एतंसदीपंदधिमाषभक्तबलिंसमर्पयामि ॥ भोदुर्गे दिशरंक्षबलिंभक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्री क्षेमकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री वरदाभव इतिदुर्गायै बलिंदद्यात् ॥

इस ऊपर में लिखे मंत्र से दीप सहित बलि दुर्गाके लिये देवे ।

॥ अथक्षेत्रपालबलिः ॥



दधिमाष सिन्दुर कज्जल दीपद्रव्य सहितं भक्तंपात्रेनिधायक्षेत्रपालायशा किनी डाकिनी भूतप्रेत पिचाश सहिताय इमंबलिं समर्पयामि ॥ भोक्षेत्रपालदिशं क्षबलिंभक्ष अस्य यजमानस्य सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्ति कर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ॥ १ ॥



दधिउर्द सिंदूर कज्जल दीप द्रव्यके सहित भातको पात्रमें रखकर क्षेत्रपालके लिये भूतप्रेत पिशाच शाकिनी डाकिनी सहित बलि देवे।

ततःॐ भूतायत्वा नारातये स्वरभिविख्येषं दृहन्तान्दुर्य्याः पृथिव्या मुर्व्वन्तरिक्षमन्वेमि पृथिव्यास्त्वनाभौसा दयाम्यदित्याऽउपस्थेऽअग्नेहव्य रक्ष ॥ अनेन क्षेत्रपति बलिनतोरप्रति तण्डुलान् प्रक्षिपेत् ॥



इस ऊपरमें लिखे मंत्रसे तण्डुल प्रक्षेपकरे।

तदेकं स्विष्टकृद्धोमः ॐ अग्नयेस्विष्टकृतेस्वाहा । इदमग्नयेस्विष्टकृते ।

इस ऊपर में लिखे मंत्रसे स्विष्ट कृत्होम करे ॥

## ब्रह्मणेपूर्णपात्रदानम् ।

ॐ अद्येत्यादि कृतस्यास्य साँगतासिध्यर्थमिदंपूर्णपात्रं प्रजापति देवतं ब्रह्मणेदातुमहमुत्सृजे ।

इस ऊपरसे लिखे वाक्य को पढ़ कर ब्रह्माके लिये कुछ दक्षिणा देवे ।

ॐ सुमित्रियानऽआपऽओषधयः इतिपवित्रि कंगृहीत्वाप्रणीताजलेन शिरः संमृज्य ॥

इस ऊपर में लिखे मंत्र से प्रणीता के जल से यजमान को मार्जन करे ।

ॐ दुर्मित्रियास्तस्मैसन्तुय्योस्मान्द्वेष्टियञ्चवयंद्विष्मः ॥ इति

ऐशान्यां प्रणीतान्युब्जां कुर्यात् ॥

इस ऊपर में लिखे अर्द्ध मंत्रसे प्रणीताके जलको ईशान कोण में गिरावे और प्रणीता को वहीं उलटा करके रखदेवे ।

ततोगोदानम् ॥ अथपूर्णाहुतिसंकल्पः ॥

अद्य इत्यादि अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे ममममनोऽभिल-षितधर्मार्थ कामादि यथेप्सितायुरारोग्यैश्वर्य्य पुत्रपशु सखि सुहृद्र संबन्धि बन्ध्वादि प्राप्तये ब्राह्मणद्वारा मत्कारिते अमुकयज्ञकर्मणि गणपतिगौर्य्यादि नवग्रहाद्यधिदेव प्रत्यधिदेव पञ्चलोकपाल दशदिक्पालाद्यावाहितेष्टदेवताप्रीतयेचस्वैर्मन्त्रैर्यव तिल तण्डुलाज्याहुतिभिः परिपूर्णतासिद्धये पूर्णाहुति होममहंकरिष्ये ।

इस ऊपर में लिखे वाक्य को पढकर यजमान पूर्णाहुति संकल्प करे ।

यजमानः सपत्नीकः आचार्यस्य दक्षिणस्कन्ध स्पृशन् ताम्बूलपूगफलान्वित

घृतंवाघृतपूर्णनारिकेलंवा स्त्रुवेकृत्वा पूर्णाहुतिंदद्यात् ॥

सपत्नीक यजमान तांबूल पूगीफल युक्त नारिकेलको और घी को स्त्रुवामें रखकर पूर्णाहुति देवे ।

तद्यथा ॐ पूर्णादर्वि परापतसुपूर्णा पुनरापत । वस्नेवविक्रीणावहाइषमूर्जँ शतक्रतोस्वाहा इतिपूर्णाहुतिः ॥

## अथवर्हिहोमः ॥

इस ऊपर में लिखे मंत्र को पढकर पूर्णाहुति देवे ।

ॐ देवागातु विदोगातु वित्वागातुमित । मनस्पत इमं देव यज्ञँ स्वाहावाते-धाः स्वाहा इति वर्हिं होमः ॥

इस ऊपर में लिखे मंत्रसे कुशाका हवन करे ।

अथभस्मवन्दनं त्र्यायुषकरणम् ॥

ॐ त्र्यायुषं जमदग्नेः इतिललाटे । कश्यपस्य त्र्यायुषम् इतिग्रीवायाम् । यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले । तन्नोऽअस्तुत्र्यायुषमिति हृदि ।

स्रु वामे लगेभस्मको अनामिका और अंगुष्ठमे लेकर ऊपर में लिखे अनुसार ललाट आदिप्रदेश में आयुष्य करे ।

ततःनीराजनम् ।

साज्यं त्रिवर्तिं संयुक्तं वन्हिना योजितंमया । दीपंगृहाण देवेश त्रैलोक्यतिमिरापहम् ॥

इस ऊपर में लिखे मन्त्रको पढकर नीराजन करे ॥

ततःपुष्पाञ्जलिं गृहीत्वा । ओंयज्ञेनयज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन् । तेहनाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्तिदेवाः ॥ १ ॥ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे । समे कामान् कामकामायमह्यं कामेश्वरो वैश्रवणो ददातु ॥ कुबेराय वैश्रवणाय महाराजायनमः ॥ ॐस्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यम्महाराज्यमाधिपत्यंमयंसमन्तपर्यायी स्यात् सार्वभौमः सर्वायुष आन्तादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यन्ताया एकराडिति तदप्येषश्लोकोभि गीतोमरुतः परिवेष्टा रो मरुत्तस्या वसन् गृहे। आविक्षितस्य कामप्रे विश्वेदेवा सभासदऽइति ॥ ॐविश्वतश्चक्षुरुतविश्वतो मुखो विश्वतोबाहूरुतविश्वतस्पात् । संबाहुभ्यान्धमति संपतत्रैर्द्यावा भूमीजनयन्देव एकः ॥ श्रीभवानी शंकर महाविष्णवादि पञ्चायतन देवताभ्यो नमः मन्त्र पुष्पाञ्जलिं समर्पयामि ॥

"यजमान हाथमे जल अक्षत पुष्पको लेकर 'यज्ञेनयज्ञम्' यहांसे लेकर पुष्पाञ्जलि समर्पयामि,,

यथांमक पढ़के मयस्थानस्थ देवताओं के लिये पुष्पाञ्जलि देवे ॥

॥ अथ प्रदक्षिणा ॥

यानि कानि च पापानि जन्मान्तर कृतानि च। तानि तानि विनश्यन्ति प्रदक्षिण पदेपदे ॥

इस ऊपरमें लिखे मंत्र को पढ़कर प्रदक्षिणा करे ॥

॥ अथ प्रार्थना ॥

अपराध सहस्राणि क्रियन्तेऽहर्निशंमया । दासोयमितिमामत्वाक्षमस्व परमेश्वर ॥ आवाहनं न जानामि न जानामि विसर्जनम् । पूजांचैव न जानामि परमेश्वर ॥ अन्यथा शरणन्नास्ति त्वमेव शरणमम । तस्मात् कारुण्य भावेन रक्षत्वं परमेश्वर ॥

यजमान हाथमें पुष्पलेकर ऊपरमें लिखे मंत्रो को पढ़कर प्रार्थना करे ।

यद्दत्तं तेन यज्ञपुरुषः प्रजापतिः प्रीयताम् ॥

आचार्य ब्रह्मा ऋत्विक आदि ब्राह्मणों को दक्षिणा देकर ऊपरमें लिखे मंत्रको पढकर यज्ञ पुरुष के लिये समर्पण करें ॥

ततोऽभिषेकं कुर्यात्—पत्नीवामतः रुद्रकलशात् पल्लवोदकैः सकलपुत्रमभिषिञ्चेत् ॐ देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् । सरस्वत्यैर्वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्ये नाभिषिञ्चामि ॥ ॐ देवस्यत्वासवितुः प्रसवेऽश्विनो बाहुभ्याम्पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि ॥ सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियैयशसेऽभिषिञ्चामि ॥ ॐपालाशो भवति तेन ब्राह्मणाऽभिषिञ्चति ब्रम्हवैपलाशो ब्रम्हणैव नमेतदभिषिञ्चति । यद्देवकल्पाञ्जुहोति प्राणाो कल्पाऽमृतनुपर्णो ॥ प्राणाऽमृते नैवैनमे तदाऽभिषिञ्चति । सर्वेषां वाएषच्छे दाना रसोयत्साम

सर्वैषामेगैनमेतद्दोदानँ रसेनाभिषिञ्चति ॥ ॐ आपोहिष्ठामयोभुवः । तानऽ ऊर्जे दधातन । महेरणायचक्षसे । योवः शिवतमोरस तस्यभाजयतेहनः । ऊशती रिवमातरः । तस्माअरङ्गमामवः यस्यक्षयायजिन्वथ । आपो जनयथाचनः ॥

यजमान कलत्र पुत्रसमन्वितको सद्रकलशसे पांचपल्लवसे ब्राह्मण ऊपर में लिखे मंत्रका पाठ करते हुए मार्जन करें इनमंत्रो में 'यस्यक्षयायजिन्वथ' इस मंत्रका मार्जनजलभूमि पर लगाकरे यह अभिषेक वेदाधिकारियों के लिये हैं अनधिकार में निम्नलिखित मंत्रसे अभिषेक करे ॥

गणाधिपोभानु शशीधरासुतो बुधो गुरुर्भार्गव सूर्य्यनन्दनः । राहुश्च केतुश्च परं नवग्रहाः कुर्वन्तुवः पूर्ण मनोरथं सदा ॥ १ ॥ उपेन्द्र इन्द्रो वरुणो हुताशनो त्रिविक्रमो देवगणाश्चतुर्भुज ॥ गन्धर्व यक्षोरगसिद्धचारणाः कुर्वन्तु वः पूर्ण मनोरथं सदा ॥ २ ॥ नलोदधीचि सगरःपुरुरवाः शाकुन्तलेयो भरतोधनञ्जयः ॥ रामत्रयं वैणय वलो युधिष्ठिरः कुर्वन्तुवः पुर्णमनोरथ सदा ॥ ३ ॥ मनुर्मरीचिभृगु दक्षनारदाः पराशरो व्यास वसिष्ठभार्गवाः ॥ वाल्मिकि कुम्भाद्भवगर्ग गौतमाः

गौरीच लक्ष्मी कुर्वन्तुवःपूर्णांमनोरथं सदा ॥ ४ ॥ रम्भा शची नत्यवतीच देवकी श्चदितिश्च रुक्मिणी। कूर्मोगजेन्द्रस्सचराचराधराः कुर्वन्तुवः पूर्णमनोरथं सदा ॥ ५ ॥ गंगाच क्षिप्रा यमुना सरस्वती गोदावरी वेत्रवतीच नर्मदा ॥ साचन्द्र भागा वरुणा त्वसी नदी कुर्वन्तुवः पूर्ण मनोरथं सदा ॥ ६ ॥ तुङ्गप्रभासो गुरु चक्र पुष्करंगया विमुक्ता वदरी वटेश्वरः। केदार पम्पासरसीच नैमिषं कुर्वन्तुवः पूर्ण मनोरथं सदा ॥ ७ ॥ शंखश्च दुर्वा सितपत्र चामरं मणिप्रदीपो वररत्नकाञ्चनम् ॥ सम्पूर्ण कुम्भः सहुतो हुताशनः कुर्वन्तु वः पूर्ण मनोरथं सदा ॥८॥ प्रयाण काले यदिवासुमङ्गले प्रभातकाले च नृपाभिषेचने । धर्मार्थ कामाय जयाय भाषित व्यासेन कुर्यात्तु मनोरथं सदा ॥ ९ ॥

साधारण जाति के यजमान के यहां इस ऊपर में लिखे मंत्रों से अभिषेक करे

अथतिलक दान मन्त्रः ॥

ॐ स्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषाविश्व वेदाः । स्वस्तिनस्ता

स्यों ऽरिष्टनेमिः स्वस्तिनो बृहस्पतिः र्दधातु ॥ १ ॥ मन्त्रार्थाः सफलाः सन्तुपूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धि नाशस्तु मित्राणामुदयस्तव ॥

इस ऊपरमें लिखे मंत्र को पढकर यजमान को तिलक करे ।

अथ प्रार्थना ॥

यान्तुदेव गणाः सर्वे पूंजामादाय मामकीम् ॥ इष्ट काम प्रसिध्यर्थं पुन रागमनायच ॥
रूपं देहि जयन्देहि यशोदेहि द्विषोजहि । पुत्रान्देहि धनं देहि सर्वान् कामांश्च देहिमे ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभि रेवच ॥ हूयतेच पुन र्द्वाभ्यां समे विष्णुः प्रसीदतु ॥
यस्यस्मृत्याचनामोक्तया ततःपूजा क्रियादिषु न्यूनं संपूर्णतां यान्ति सद्यो वन्देत मच्युतम्॥

यजमान हाथ मे अक्षत पुष्प लेकर सकल स्थान पर छोड़े ऊपर में लिखे मत्रको पढकर विसर्जनकरे

इति वासिष्ठि हवन समाप्तः ।

पं० रामेश्वर दत्तमेशर्मापाण्डेयकृत भाषाटीकोपेतातेनैवसंशोधिता च ॥ इति शम् ॥



बाबू काशीप्रसाद भार्गव द्वारा, भार्गवभूषण प्रेस, त्रिलोचन काशी में मुद्रित ।

इति वाशिष्ठी हवन पद्धतिः

भाषा टीका सहितः ।